श्रीजानकीवल्लभो विजयते ।

# संस्कृतभूमिका ।

जयति सरामो रामो जगतामुपकारकारणं येन ।
अकृत सशेषः शेषो विदितविशेषो निरवशेषः ॥

वराहमिहिरेण निजपञ्चसिद्धान्तिकायां भट्टोत्पलेन च स्वकृत-बृहत्संहिताटीकायां यस्य सूर्यसिद्धान्तस्य मतं बहूनि वचनानि च संगृहीतानि स सूर्यसिद्धान्तो नायम् ।

भास्कराचार्येण स्वसिद्धान्तशिरोमणिगणिताध्यायभगणोपपत्तौ यत्सूर्यसिद्धान्तवचनं संगृहीतं तदत्र तादृगेवोपलभ्यते तथा तेनैव निजगोलाध्याययन्त्राध्याये (यष्ट्या शङ्कुत्रितयं ज्ञात्वा वा कथ्यते सर्वम्) इत्यस्य मिताक्षरायां तथा (भात्रितयाद्याम्रमणम्) इत्यादिना च यस्य सूर्यसिद्धान्तस्य मतं खण्डितं तन्मतमप्यस्यत्र (द्रष्टव्यावस्य ग्रन्थस्य त्रिप्रश्नाधिकारे श्लो ४०—४१ । परन्तु तेनैव निजगोलाध्यायगोलबन्धाधिकारे (तद्भगणाः सौरोक्ता व्यस्ता अयुतत्रयं कल्पे) इति यत्सौरमतं लिखितं तच्च नास्त्यस्मिन् सूर्यसिद्धान्ते द्रष्टव्यावस्य ग्रन्थस्य त्रिप्रश्नाधिकारे श्लो ९—१०)। अतोऽयं सूर्यसिद्धान्तः प्रायो भास्करकालिकसूर्यसिद्धान्तानुकल्प एवेत्यसंशयं प्रतीयते ।

उपरिलिखितहेतुना भट्टोत्पलानन्तरं भास्कराचार्यतः प्रागेव भारतवर्षेऽस्य सूर्यसिद्धान्तस्य प्रचारो जात इति स्फुटम् ।

भट्टोत्पलेनाष्टाशीत्यधिकाष्टशततमे शके(८८८)ऽर्थात् षट्षष्ठ्यधिकनवशततमखीष्टाब्दे (९६६) वराहमिहिरकृतबृहज्जातकोपरि टीका निरमायि।

भास्कराचार्येण च 'अदृश्यरूपा: कालस्य मूर्त्तयो भगणाश्रिता:'। इत्येतत्सूर्यसिद्धान्तश्लोकद्वयं बहादरेण स्वमतपोषणाय स्वभगणोपपत्तावुपन्यस्तम्। अतो यदि भास्करजन्मसमयात् षट्त्रिंशशतमशका (१०३६) दर्थात् वेदेन्दुरुद्रखीष्टशकात् (१११४) पूर्वं वर्षशतादस्य प्रचारसमय: कल्प्यते तदा प्रचारत्वादयं सूर्यसिद्धान्तो वेदेन्दुद्युशतम (१०१४) खीष्टशकासन्ने प्रादुरासीदिति सिध्यति।

वेबरमहाशय—(Professor Weber) मतेन एजिपट्-देशस्य टालमयस (Ptolemaias) नामा नृपतिरेव भारतवर्षे संस्कृतभाषायां तुरमयनाम्ना प्रसिद्ध:। पश्चात् स एव असुरमय इति भारतवर्षे प्रसिद्ध:। अत: टालमी (Ptolemy) नामकगणकग्रन्थस्य आलमाजेस्ट—(Almajest) संज्ञस्यानुवाद एवायं सूर्यसिद्धान्त:। आलमाजेस्ट-सूर्यसिद्धान्तयो: प्रकाराणां भेदान्नायं सूर्यसिद्धान्त आलमाजेस्टानुवाद इति शङ्करबालकृष्णादीक्षितमतं साधु प्रतिभाति। मयदैत्यानुकम्पयाऽथ सूर्यसिद्धान्तो भारतवर्षे प्राप्त इत्यत्र न कश्चित् संशय:। (द्रष्टव्यमस्य ग्रन्थस्य पृ. ३३४)।

अत्राद्येभ्य आर्षसिद्धान्तेभ्यो बहूनि नूतनानि प्रकारान्तराणि सन्ति। अतोऽयं वसिष्ठब्रह्मसिद्धान्तादिभ्यो नूतन:। परन्त्वयं सूर्यसिद्धान्त: कृतयुगान्ते सूर्यप्रसादतो, मयदैत्येन लब्धस्तस्मात् भारतवर्षपण्डितेषु प्रसिद्ध इति एतत्कर्त्रा स्वयमेव ग्रन्थादौ लिखितम्। अत एव तेनैतत्सूर्यसिद्धान्तकृताऽस्मिन् ग्रन्थे रामशब्देन

वयं मन्दशब्देन नव जिनशब्देन सिद्धशब्देन च चतुर्विंशतिः संख्या क्वापि न पठिता यतस्ते शब्दाः कृतयुगात्तानन्तरं भारतवर्षे प्रचलिता इति महच्चित्रम्।

अस्तु यत् किमपि सत्यम्। संप्रति तु भारतवर्षीया विद्वांसोऽमुं सिद्धान्तं वेदवन्मन्यन्ते। गाणितिकाः स्नानजपहोमादिनाऽऽत्मानं पूतीकृत्यामुं पठन्ति पाठयन्ति चन्द्रसूर्योपरागयोश्च महापुण्यप्राप्तयर्थमस्य पाठं च कुर्वन्ति। ते महापुण्यजनकत्वादस्योपर्यनेकाष्टीकाश्चक्रुः कुर्वन्ति च। अत एव मयाऽपि भारतीयं यूरपदेशीयरीतीश्चावलम्ब्येयं सुधावर्षिणी टीका रचिता यया भारतीयानां यूरपदेशीयानां च मिथो नूतनप्रकारज्ञानेनोपकारो भवतीति दृढमाशासे।

अथ बङ्गाली-एशियाटिकसोसाइटी-सभ्येभ्यो मम विशेषो धन्यवादो यैरनुकम्पया स्वसभाद्वारेण समादरेणेयं मुद्रितेति

२८—१०—१८१० [सुधाकरद्विवेदी।